श्रीविघ्नेश्वराष्टोत्तर शतनामस्तोत्रम्

विनायको विघ्नराजो गौरीपुत्रो गणेश्वरः ।
स्कन्दाग्रजोऽव्ययो पूतो दक्षोऽध्यक्षो द्विजप्रियः ॥ १॥

अग्निगर्भच्छिदिन्द्रश्रीप्रदो वाणीबलप्रदः ।
सर्वसिद्धिप्रदश्शर्वतनयः शर्वरीप्रियः ॥ २॥

सर्वात्मकः सृष्टिकर्ता देवोऽनेकार्चितश्शिवः ।
शुद्धो बुद्धिप्रियश्शान्तो ब्रह्मचारी गजाननः ॥ ३॥

द्वैमात्रेयो मुनिस्तुत्यो भक्तविघ्नविनाशनः ।
एकदन्तश्चतुर्बाहुश्चतुरश्शक्तिसंयुतः ॥ ४॥

लम्बोदरश्शूर्पकर्णो हरिर्ब्रह्म विदुत्तमः ।
कालो ग्रहपतिः कामी सोमसूर्याग्निलोचनः ॥ ५॥

पाशाङ्कुशधरश्चण्डो गुणातीतो निरञ्जनः ।
अकल्मषस्स्वयंसिद्धस्सिद्धार्चितपदाम्बुजः ॥ ६॥

बीजपूरफलासक्तो वरदश्शाश्वतः कृतिः ।
द्विजप्रियो वीतभयो गदी चक्रीक्षुचापधृत् ॥ ७॥ विद्वत्प्रियो

श्रीदोऽजोत्पलकरः श्रीपतिः स्तुतिहर्षितः ।
कुलाद्रिभेत्ता जटिलः कलिकल्मषनाशनः ॥ ८॥

चन्द्रचूडामणिः कान्तः पापहारी समाहितः ।
आश्रितश्श्रीकरस्सौम्यो भक्तवाञ्छितदायकः ॥ ९॥

शान्तः कैवल्यसुखदस्सच्चिदानन्दविग्रहः ।
ज्ञानी दयायुतो दान्तो ब्रह्म द्वेषविवर्जितः ॥१०॥

प्रमत्तदैत्यभयदः श्रीकण्ट्ःओ विबुधेश्वरः ।
रमार्चितोविधिर्नागराजयज्ञोपवीतकः ॥११॥

स्थूलकण्ठः स्वयङ्कर्ता सामघोषप्रियः परः ।
स्थूलतुण्डोऽग्रणीर्धीरो वागीशस्सिद्धिदायकः ॥ १२॥

दूर्वाबिल्वप्रियोऽव्यक्तमूर्तिरद्भुतमूर्तिमान् ।

शैलेन्द्रतनुजोत्सङ्गखेलनोत्सुकमानसः ॥ १३॥

स्वलावण्यसुधासारो जितमन्मथविग्रहः ।
समस्तजगदाधारो मायी मूषकवाहनः ॥१४॥

हृष्टस्तुष्टः प्रसन्नात्मा सर्वसिद्धिप्रदायकः ।
अष्टोत्तरशतेनैवं नाम्नां विघ्नेश्वरं विभुं ॥ १५॥

तुष्टाव शङ्करः पुत्रं त्रिपुरं हन्तुमुत्यतः ।
यः पूजयेदनेनैव भक्त्या सिद्धिविनायकम् ॥१६॥

दूर्वादलैर्बिल्वपत्रैः पुष्पैर्वा चन्दनाक्षतैः ।
सर्वान्कामानवाप्नोति सर्वविघ्नैः प्रमुच्यते ॥

इति श्रीविघ्नेश्वराष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ।